# अन्योक्तयः

**एस्.जगन्नाथः, मैसूरु**

©jagannathas1956@gmail.com

कस्मिंश्चिद्दिने नजसलगेति छन्दोगतिरकस्मान्मयि स्फुरिता। क्वापि आप्टेकोषपरिशिष्टादिषु तां गतिमपश्यता मया तस्या नामधेयं **निजशीलिका** इति विहितं लक्षणं च **नजसलगेन निजशीलिका** इति दत्तम्। तस्यां निबद्धा नवान्योक्तयोऽत्र दत्ताः।

१.वनभुवि हिंस्र-दर-जन्म-भू-
रव-भव-दम्भ, तव केसरिन्!
भवति किमुग्रमहिषव्रज-
स्फुरदुरुशृङ्गवलनैर्भयम् ?

२.चटुलशरीर, कुरुतः स्फुटं
बहुलभयेन भरितां दृशम्।
लघुकरिपोत! पितरौ त्वयि
स्थपुटितभूमिचलनोत्सुके॥

३.कपिनिवहेन हरिणो दृढं
जनयतु सख्यमटवौ चरन्।
हरिविषयां झटिति चीत्कृतिं
विटपिगतेन परिमुञ्चता ॥

४.खग! वरकाष्ठचयनश्रमैर्
विरचितनीड, किल दृप्यसि।
निजमतिमेव बहु मानयन्
परखगबुद्धिमविचारयन्॥

५.निबिडसुधाढ्यकुसुमद्रवेष्व्
अतिजड, मल्लकलहान् अले!
स्थगयसि चेन्न परषट्पदैः-
कथय, करोषि किमुपोषणम्॥

६.शुकवदनाद् विगलिते फले
मुदित इवासि किल मूषिक!
नभसि न काकमभिवीक्षसे
कृतडयनं सुविहितस्मितम्॥

७.खरनखरैर्निशितखादनैर् [खादनैः=दन्तैः। रदना दशना दन्ता दंश-
द्रुतगतिभी रभसलङ्घनैः। खादनमल्लका इत्यभिधानचिन्तामणिः]
यदि हरिणं करगतं करोष्य्
अहह किमद्भुतमिदं हरे! ?॥

८.न चमरपुच्छ! तव जायते
श्रमलव आशुतरकूर्दनैः।
परमिह तानि परिपश्यतो
मम हृदि संभवति कौतुकम्॥

९.मनसि शशायि! तव भासतां
मुदित-मृगेन्द्र-सह-खेलनम्।
तव वपुरेतदवशिष्यते
यदि यतसे न हृदभीप्सिते॥

**एस्.जगन्नाथः, मैसूरु**

©jagannathas1956@gmail.com
10-9-2021